या: केशवाङ्गे तदपाङ्गपूताः सानङ्गरङ्गां दृशमर्पयन्ति ॥

*पुलिन्दी यथा—*

कालिन्दीपुलिने पश्य पुलिन्दी पुलकाञ्चिता।
हरेर्दृक्चापलं प्रेक्ष्य सहजं या विघूर्णते ॥

*वृद्धा यथा—*

कज्जलेन कृतकेशकालिमा बिल्वयुग्मरचितोन्नतस्तनी।
पश्य गौरि किरती दृगञ्चलं स्मेरयत्यघहरं जरत्यसौ ॥

**स्थायिनोऽत्र विरूपत्वमेकरागतयापि चेत्।**
**घटेतासौ विभावस्य विरूपत्वेऽप्युदाहृतिः ॥ १३ ॥**
**शुचित्वौज्ज्वल्यवैदग्ध्यात् सुवेषत्वाच्च कथ्यते।**
**शृङ्गारस्य विभावत्वमन्यत्राभासता ततः ॥ १४ ॥**

*अथानुभाववैरूप्यम्—*

**समयानां व्यतिक्रान्तिर्ग्राम्यत्वं धृष्टतापि च।**
**वैरूप्यमनुभावादेर्मनीषिभिरुदीरितम् ॥ १५ ॥**

*तत्र समयव्यतिक्रान्तिः—*

**समयाः खण्डितादीनां प्रिये रोषोदितादयः।**
**पुंसः स्मितादयश्चात्र प्रियया ताडनादिषु ॥ १६ ॥**
**एतेषामन्यथाभावः समयानां व्यतिक्रमः।**

*तत्राद्यं यथा—*

कान्तानखाङ्कितोऽप्यद्य परिहृत्य हरे ह्रियम्।
कैलासवासिनीं दासीं कृपादृष्ट्या भजस्व माम् ॥

*अथ ग्राम्यत्वम्—*

**बालशब्दाद्युपन्यासो विरसोक्तिप्रपञ्चनम् ॥ १७ ॥**
**कटीकण्डूतिरित्याद्यं ग्राम्यत्वं कथितं बुधैः।**

---

"याः केशवाङ्गं सखि सङ्गमय्य स्वैरादपाङ्गं भवतीर्जयन्ति ॥" इति वा पाठः।

वैदग्ध्येत्यादिना दर्शितमेव विवृण्वन्नुपसंहरति—शुचित्वेति।

शुचित्वादिकमालम्बनस्य ज्ञेयं विभावत्वं विशिष्टो भावः सत्ता स्थायी वा यत्र तद्रूपत्वम्। "पावित्र्यौज्ज्वल्यवैदग्ध्यसुवेषत्वैर्विभावगैः।
शृङ्गारः पुष्टिमागच्छेदाभासत्वमतोऽन्यथा ॥" इति वा पाठान्तरम्।

समयाः आचाराः।

*तत्राद्यं यथा—*

किं नः फणिकिशोरीणां त्वं पुष्करसदां सदा।
मुरलीध्वनिना नीवीं गोपबाल विलुम्पसि॥

*अथ धृष्टता—*

**प्रकटप्रार्थनादिः स्यात्सम्भोगादेस्तु धृष्टता ॥ १८ ॥**

*यथा—*

कान्तः कैलासकुञ्जोऽयं रम्याहं नवयौवना।
त्वं विदग्धोऽसि गोविन्द किं वा वाच्यमतः परम्॥

**एवमेव तु गौणानां हासादीनामपि स्वयम्।**
**विज्ञेयोपरसत्वस्य मनीषिभिरुदाहृतिः ॥ १९ ॥**

*अथानुरसाः—*

**भक्तादिभिर्विभावाद्यैः कृष्णसम्बन्धवर्जितैः।**
**रसा हास्यादयः सप्त शान्तश्चानुरसा मताः ॥ २० ॥**

*तत्र हास्यानुरसः—*

ताण्डवं व्यधित हन्त कक्खटी मर्कटीं भ्रुकुटिभिस्तथोद्धुरम्।
येन बल्लवकदम्बकं बभौ हासडम्बरकरम्बिताननम्॥

*अथाद्भुतानुरसः—*

भाण्डीरकक्षे बहुधा वितण्डां वेदान्ततन्त्रे शुकमण्डलस्य।
आकर्णयन्निर्निमिषाक्षिपक्ष्मा रोमाञ्चिताङ्गश्च सुरर्षिरासीत्॥

**एवमेवात्र विज्ञेया वीरादेरप्युदाहृतिः।**

---

कैलासवासिनीनामिव पुराणान्तरकथितरीत्या फणिकिशोरीणामप्युदाहृतिमुपरस एवावज्ञया वर्णयति—किं न इति। पुष्करसदां कालियह्रदस्य जलवासिनीनाम्।

अत्र श्रीकृष्णस्य तदा बाल्येऽपि मुरलीध्वनिविशेषेण कृतकैशोरमानस्य बालेति सम्बोधनं तासामवैदग्ध्यमेव ज्ञेयम्।

भक्तादिभिरिति। भक्ता अत्र पञ्चविधाः। शान्तस्तु रसशास्त्रान्तरप्रसिद्धो रूढः।

कक्खटीनाम्नी।

भाण्डीरकक्षे तदूर्ध्वगलतासु। "सौरभे च तृणे कक्षः शुष्ककाननवीरुधोः।" इति विश्वः। "भाण्डीरवृक्षे" इति पाठस्तु सुगमः।

अष्टावमी तटस्थेषु प्राकट्यं यदि बिभ्रति ॥ २१ ॥
कृष्णादिभिर्विभावाद्यैस्तदाऽप्यनुरसा मताः ।

*अथापरसः—*

कृष्णतत्प्रतिपक्षाश्चेद्विषयाश्रयतां गताः ॥ २२ ॥
हासादीनां तदा तत्र प्राज्ञैरपरसा मताः ।

*तत्र हास्यापरसः—*

पलायमानमुद्वीक्ष्य चपलायतलोचनम् ।
कृष्णमाराज्जरासन्धः सोल्लुण्ठमहसीन्मुहुः ॥

एवमन्येऽपि विज्ञेयास्तेऽद्भुतापरसादयः ॥ २३ ॥
उत्तमास्तु रसाभासाः कैश्चिद्रसतयोदिताः ।

*तथा हि—*

भावाः सर्वे तदाभासा रसाभासाश्च केचन ॥ २४ ॥
अमी प्रोक्ता रसाभिज्ञैः सर्वेऽपि रसनाद्रसाः ।
भारत्याद्याश्चतस्रस्तु रसावस्थानसूचिकाः ॥ २५ ॥
वृत्तयो नाट्यमातृत्वादुक्ता नाटकलक्षणे ।

इति रसामृतसिन्धावुत्तरविभागे रसाभासलहरी नवमी ॥ ९ ॥

ग्रन्थस्य गौरवभयादस्या भक्तिरसश्रियः ।
समाहृतिः समासेन मया सेयं विनिर्मिता ॥ १ ॥

---

अष्टाविति । अत्र जरासन्धस्य हासस्तावदपरस एव, कस्यचित्तद्वदासुरभावस्यापि । तदनुगतो हासश्चेत्तदा शुद्ध एव हास्यरसः ।

एवमिति । अत्र सर्वप्रकरणार्थः समस्य विन्यस्यते—

विभावाद्या मिथो योग्याः सम्पद्यन्ते रसाय ते ।
वैरस्यायान्यथा, सा तु योग्यता लोकविश्रुता ॥

नाट्यमातृत्वाद् नाट्य एवोपयुक्तत्वादित्यर्थः ।

नाटकलक्षणे = नाटकचन्द्रिकाख्ये स्वकृत इति ज्ञेयम् ।

इत्युत्तरविभागे नवलहर्यात्मके रसाभासलहरी नवमी ।

इति दुर्गमसंगमनीनाम्न्यां हरिभक्तिरसामृतसिन्धुटीकायां चतुर्थो विभागः ।

**गोपालरूपशोभां दधदपि रघुनाथभावविस्तारी ।**
**तुष्यतु सनातनोऽस्मिन्नुत्तरभागे रसामृताम्भोधेः ॥ २ ॥**

इति भक्तिरसामृतसिन्धौ गौणभक्तिरसादिनिरूपणनामा चतुर्थो विभागः ।

**रामाङ्गशक्र १४६३ गणिते शाके गोकुलमधिष्ठितेनायम् ॥**
**भक्तिरसामृतसिन्धुर्विटङ्कितः क्षुद्ररूपेण ॥ १ ॥**

*** इति श्रीहरिभक्तिरसामृतसिन्धुः ***

॥ समाप्तः ॥

---

रामाङ्गेति । शालिवाहनस्य संवत्सरगणनया विक्रमादित्यस्यापि सा ज्ञेया, अङ्कस्य वामा गतिरिति प्रसिद्धया त्रिषष्ट्यधिकचतुर्दशशतीगणित इत्यर्थः, विक्रमादित्यस्य त्वष्टनवत्यधिकपञ्चदशशतीगणित इति ज्ञेयम् ।

विटङ्कितः उट्टङ्कितः, सुष्ठु रूपेणेत्येव पठितव्यं तेषां दीनंमन्यतामयपाठेऽपि तदसहिष्णुः सरस्वती क्षुद्रं सूक्ष्मं दुर्ज्ञेयं रूपं स्वरूपं यस्येति गत्यन्तरास्पदं पदं स्फोरयन्ती समाहितवती ।

श्रीकृष्णः सर्वपूर्णः स चरति विपुले गोकुले व्यक्ततत्त-
न्माधुर्यैश्वर्यवर्यः स च पशुपसुतानन्तलक्ष्मीभिरिष्टः ।
श्रीराधावर्गमध्ये स च मधुरगुणश्रीधुराधामधारी-
त्यस्मिन् ग्रन्थे रसाब्धावभिमतमहिमाधारसारप्रचारः ॥

यदपि च नातिविशुद्धा तदपि च सद्भिः कदाप्युरीकार्या ।
दुर्गमसङ्गमनीयं नौकेवास्यामृताम्भोधेः ॥

समाप्ता चेयं टीका तेषामेव प्रीतये भवतु ।

[ मूलं ३३२५ टीका ३६४४ समस्त ग्रन्थः ६९६९ । ]

# भक्तिरसामृतसिन्धौ

## उदाहृतश्लोकानामकाराद्यनुक्रमणी

( आ )



( इ )

( फ )



( ब )

(श)

( ह )

# भक्तिरसामृतसिन्धुकारिकागाम-कारााद्यनुक्रमणी

( श )

